"दंसणनाणचरित्तं तवविणयं जत्थ जत्तियं पासे ।
जिणपन्नत्तं भत्तीइ पूअए तं तहिं भावं६९ ॥"

केनेवानुवर्त्तना कर्त्तव्येत्युपमानमाह—अग्रहिलस्तत्त्वतोऽविकलः सन् ग्रहिलो व्याजविकलभावमापन्नो यो नृपस्तेनेव, तथा ह्येतत्सम्बन्धः—पृथ्वीपुरे नगरे पूर्णो नाम राजा राज्यं भुङ्क्ते, सुबुद्धिश्च तस्य सचिवः, तस्यान्यदा कालज्ञेन न्यवेदि, देव! मासोपरि वृष्टिस्तादृशी भाविनी यदुदकपानाल्लोका ग्रहोन्मादवन्तः संपत्स्यन्ते, ततः कियत्यपि काले गते सुवृष्टिर्भविष्यति ततश्च सर्वं सुन्दरं संपत्स्यत इति । इदं च समाकर्ण्य लोकानां हिताय राज्ञा डिंडिमोद्घोषणा कारितोदकसंग्रहः कुरुध्वमिति, ततो लोके-नापि सर्वेण यथासामर्थ्यमुदकसंग्रहः कृतो जाता च मासोपरि नैमित्तिकनिरूपिता कुवृष्टिः, क्षीणं च ततो लोकानां शुभादृष्ट-मिव संगृहीतं जलम् । प्रवृत्तश्च लोकः कुव्यापार इव नव्यनीर-पाने, जातश्च ततः परमविषाद इवोन्मादः, ततः सामन्तादीना-मपि गृहीतजलक्षये नव्यनीरपानाल्लोकवदुन्मत्तीभूतानां न काचिच्चेष्टा राज्ञा सह मिलति, ततस्तैरेवं मन्त्रणमकारि, यथाऽयं नृपोऽस्मासु सत्सु राज्यसुखभागी भवति अस्मन्मताननुवर्त्तकस्तु कियच्चिरं राज्यं करिष्यतीति गृहीत्वा बध्नीम एनम् । एवं मन्त्रयमाणाश्च ते मन्त्रिणा ज्ञाताश्चिन्तितं च तेन, नास्ति नृपस्य राज्यजीवितव्ययो रक्षणे एतदनुवर्त्तनमन्तरेणान्य उपाय इति । एवं च राज्ञा सह मन्त्रणं कृत्वा दर्शिता तेन कृत्रिमग्रहोन्माद-चेष्टा, ततः सप्रजानां सामन्तादीनामत्यन्तं प्रमोदः समजनि, निर्वाहितश्च कालस्तथैव चेष्टमानेन पुराणमुदकं पिबता राज्ञा, ततः कालेन सुभिक्षमभूत्, सुवृत्तं च ततः सर्वतो भद्रमिति ।

---

६९ दर्शनज्ञानचरित्रं तपोविनयं यत्र न्तं पश्येत् ।
जिनप्रज्ञप्तं भक्त्या पूजयेत्तं तत्र भावम् ॥

अयमत्रोपनयः, राजस्थानीय आत्मा, शास्त्रानुसारिणी बुद्धिश्च मन्त्रिस्थानीया, तदेकचित्तेनात्मना कुग्रहरूपमुन्मादकजलं परित्यज्यात्मरक्षणार्थं यावच्छुभकालं तद्वदनुवर्त्तनापि कर्त्तव्येति । तदुक्तम्–

"वहुकुग्गहंमि वि जणे तदभोगणुवत्तणाइ तह चेव ।
भावेण धम्मरज्जे जा सुहकालो सुवासंति[७०]" ॥१४८॥

नन्वात्मरक्षणार्थमसंविग्नानुवर्त्तनायामसंयताविशेषप्रसङ्गस्तेऽपि ह्यात्मानं रक्षितुमन्यमनुवर्तन्त एवेत्याशङ्कायामाह–

**सा ओयरक्खणट्ठं तं आणाजोगओ ण इयरावि ।
सो अ गुरुनिओगेणं भणंति तल्लक्खणं इणमो ॥१४९॥**

सा संविग्नानुवर्त्तना, आत्मरक्षणार्थम्, तदात्मरक्षणं आज्ञायोगत आज्ञायोगमाश्रित्य । नत्वितरथापि विषयेच्छाद्यर्थमपि, तथा च न संयतासंयतसाम्यमिति भावः। आज्ञायोगोऽपि कथं व्यवतिष्ठत इत्याह–स चाज्ञायोगः, गुरुनियोगेन गुरुपारतन्त्र्येणान्यथा सम्यग् तदनवबोधप्रसङ्गात् । स च कीदृशो भवतीत्याह–तल्लक्षणं गुरुलक्षणं, इदं भणन्ति पूर्वाचार्याः ॥१४९॥

**उभयण्णूवि य किरिआपरो दढं पवयणाणुरागी य ।
ससमयपण्णवओ परिणओ अ पण्णो अ अच्चत्थं ॥१५०॥**

उभयज्ञ उत्सर्गापवादकल्प्याकल्प्यनिश्चयव्यवहारादिपदार्थद्वैतपरिच्छेदी । अपि च क्रियापरो मूलगुणोत्तरगुणाराधनायां वद्धकक्षः, दृढमत्यर्थं, प्रवचनानुरागी च जिनवचनं प्रति वहुमान-

---

७० वहुकुग्रहेऽपि जने तदभोगानुवर्तनादि तथा चैव ।
भावेन धर्मराज्ये यावत्सुखकालः सुवर्षमिति ॥

वान्, तथा स्वसमयस्य चरणकरणाद्यनुयोगभेदभिन्नस्य प्ररूपकस्तैस्तैरुपायैरुपदेशकः, परिणतश्च वयसा व्रतेन च, प्राज्ञश्च बहुबहुविधादिग्राहकबुद्धिमान्, अत्यर्थमतीव, एवंविधेन हि गुरुणा प्रज्ञाप्यमानोऽर्थो न कदाचिद्विपर्ययभाग् भवतीत्येवमेष विशेष्यत इत्येवंभूतो गुरुः श्रद्धेयः ॥१५०॥ स्वसमयप्रज्ञापकत्वं विशेषतो लक्षयति—

**जो हेउवायपक्खंमि हेउओ आगमे य आगमिओ।**
**सो ससमयपण्णवओ सिद्धंतविराहगो अण्णो ॥१५१॥**

यः कश्चिद्धेतुवादपक्षे जीवकर्मादौ युक्तिमार्गसहे वस्तुनि, हेतुको युक्तिप्रणयनप्रवीणः, आगमे च देवलोकपृथ्वीसंख्यादावर्थे आगममात्रगम्ये, आगमिक आगममात्रप्रज्ञापनाप्रवीणः, स स्वसमयप्रज्ञापक उच्यते। व्यवच्छेद्यमाह—सिद्धान्तविराधको जिनवचनानुयोगविनाशकः, अन्यः प्रागुक्तविशेषणविकलः साधुः, तथाहियुक्तिमार्गसहेष्वप्यागमगम्यत्वमेव पुरस्कुर्वता तेन नास्तिकादिप्रणीतकुयुक्तिनिराकरणाभावान्न श्रोतॄणां दृढा प्रतीतिः कर्त्तुं पार्यते, आगमगम्येषु तु युक्तिपथातीतेषु युक्तिमुट्टंकयन्नसंपादितनियतार्थप्रतीतिर्विफलारम्भत्वेन स्वयमेव वैलक्ष्यं भजते, श्रोतुश्चानादेयवचनो भवतीति न विपरीतव्यवहारिणा तेन सम्यक्सिद्धान्त आराधितो भवति ॥१५१॥

एतद्विलक्षणं गुरुत्वाभिमानिनमवगणयन्नाह—

**जो एअगुणविउत्तो सो निद्धम्मो सुअं विडंवंतो।**
**गुरुनामेणं लोए बोलेइ बहू जणा भणिअं ॥१५२॥**

य एतद्गुणवियुक्त उभयज्ञत्वादिगुणरहितः, स निर्द्धर्मो श्रुतचारित्रधर्मपराङ्मुखः, गुरुनाम्ना श्रुतं जिनमतं विडम्बयन्

सन्नीदृशं गुर्वाश्रितं शासनं स्थानस्थमिति बहुनामश्रद्धाजननात्, बोलेइत्ति मज्जयति संसारसमुद्रे बहून् जनान् स्वाभिगृहीतादृष्ट-कल्याणमुग्धमतिलोकान्। यतो भणितं संमत्युपदेशमालादौ ॥१५२॥

जह जह बहुस्सुओ संमओ अ सीसगणसंपरिवुडो अ।
अविणिच्छिओ अ समए तह तह सिद्धंतपडिणीओ॥१५३।

यथा यथा बहुश्रुतः परिपठितबह्वागमः, संमतश्च बहुमतः संसाराभिनन्दिनां गतानुगतिकप्रवाहपतितानां तदनुवर्त्तिनां चान्येषां बाह्याडम्बरदर्शनमात्रोदितविस्मयानां मुग्धमतीनां च, च पुनः शिष्यगणैर्विनेयवृन्दैः संपरिवृतः समन्तात् परिवृतः, अविनिश्चितः सम्यगपरिणतश्च, प्रवचने ऐदम्पर्याज्ञानाद्विरत्यप्रह्वत्वाच्च, तथा तथा सिद्धान्तप्रत्यनीको रंजनकलादेयतापरबन्धनबाहुल्यहेतुयोगान्निःशंकमसत्प्रवृत्त्या यथास्थितसिद्धान्तस्य विपर्यासापादनात्, अतो नेदृशगुर्वाश्रयणं युक्तं किन्तूक्तगुणवद्गुर्वाश्रयणमेव श्रेय इति भावः ॥१५३॥

सुगुरुसेवया कथमाज्ञायोगलाभ इत्याह—

सुत्तत्थाण विसुद्धी सीसाणं होइ सुगुरुसेवाए।
सुत्ताओ वि य अत्थे विहिणा जत्तो दढो जुत्तो ॥१५४॥

शिष्याणां सुगुरुसेवया सूत्रार्थयोर्विशुद्धिर्भवति तत्प्रसादायत्तत्वात्तस्याः, इयमेव च परमा भगवदाज्ञा, सूत्रार्थयोरपि मध्येऽर्थ एव बलवानिति व्यञ्जयन्नाह—सूत्रादप्यर्थे विधिना मंडलीकरणादिरूपेण दृढो यत्नः कर्त्तुं युक्तः ॥१५४॥

कुत इत्याह—

मूअं केवलसुत्तं जीहा पुण होइ पायडा अत्थो।
सो पुण चउहा भणिओ हंदि पयत्थाइभेएण ॥१५५॥

मूकं मूकपुरुषतुल्यं कस्यचिदर्थस्यावाचकम्, केवलसूत्रं व्याख्यानरहितसूत्रम्, अर्थः पुनः प्रकटा जिह्वा परावबोधहेतुत्वादिति, तद्भेदानाह—हंदीत्युपदर्शने, पुनरर्थः पदार्थादिभेदेन चतुर्धा भणितः। तदुक्तम्—

"पयवक्कमहावक्कत्थमइदंपज्जं च एत्थ चत्तारि।
सुअभावावगमंमी हंदि पगारा विणिद्दिट्ठा[७१] ॥

तत्र पदार्थो यथाश्रुतार्थः पद्यते गम्यतेऽर्थः सामान्यरूपोऽचालिताप्रत्यवस्थापितो येनेति व्युत्पत्तेः। तदाह—

"अत्थपदेण हु जम्हा एत्थ पयं होइ सिद्धंति[७२]॥"

वाक्यार्थश्चालना, महावाक्यार्थश्च प्रत्यवस्थापना, ऐदम्पर्यार्थश्च तात्पर्यार्थ इति ॥१५५॥

इत्थमर्थचातुर्विध्यमन्येषामपि संमतमित्याह—

अण्णेहि वि पडिवन्नं एअं सत्तुग्गहाउ णट्ठस्स।
भट्ठस्स य मग्गाओ मग्गन्नाणस्स णाएणं ॥१५६॥

अन्यैरपि, एतत्पूर्वोक्तम्, प्रतिपन्नमंगीकृतम्, कथमित्याह—शत्रुग्रहान्नष्टस्य पाटिलपुत्रादौ प्रस्थितवतः पुरुषस्य काञ्चिद्विषमां भुवं प्राप्तस्य शत्रावुपस्थिते ग्रहिष्यतीत्ययमिति भयात् पलायितस्य, ततो मार्गाद् भ्रष्टस्य मार्गज्ञानस्य मार्गावबोधस्य ज्ञातेन

---

७१ पद १ वाक्यं २ महावाक्यार्थं ३ ऐदंपर्यं ४ चात्र चत्वारि।
श्रुतभावावगमे हन्दि प्रकारा विनिर्दिष्टाः॥

७२ अर्थपदेन खलु यस्मादत्र पदं भवति सिद्धमिति॥

॥ वाक्यान्तरमधिकृत्याह—

तवज्झाणाइ कुज्जा एत्थ पयत्थो उ सव्वहिं ओहा ।
छट्ठुस्सग्गाईणं करणं सेयं सिवट्ठंति ॥१६५॥

तपोध्यानादि कुर्यादत्र वाक्ये पदार्थस्तु सर्वत्र ओघेन समर्थासमर्थादिपरिहारसामान्येन, शिवार्थं मोक्षार्थं षष्ठोत्सर्गादीनां करणं श्रेय इति ॥ १६५ ॥

तुच्छावत्ताईणं तक्करणं अकरणं अओ पत्तं ।
बहुदोसपसंगाओ वक्कत्थो एस दट्ठव्वो ॥१६६॥

तुच्छा असमर्था बालवृद्धादिलक्षणा अव्यक्ताश्चागीतार्था आदिनावश्यकहानियोग्यादिग्रहस्तेषामतः पदार्थात् तत्करणं षष्ठोत्सर्गादिकरणं आप्तं बहुदोषप्रसङ्गात्, शक्त्यतिक्रमेण तपोध्यानादिकष्टानुष्ठानस्यार्त्तध्यानमयत्वेन तिर्यगाद्यशुभजन्माद्यापत्तेः करणं तत्त्वतोऽकरणमेव तत्, एष वाक्यार्थो द्रष्टव्यः ॥१६६॥

एस महावक्कत्थो समयोवाहेण एत्थ जमदोसो ।
सव्वत्थ समयणीई अइदंपज्जत्थओ इट्ठा ॥१६७॥

एष महावाक्यार्थः यत्समयाबाधेनागमानुल्लंघनेन, अत्रादोषः, आगमश्चायमत्र व्यवस्थितः—

"तो जह न देहपीडा नया वि विमंससोणियत्तं च ।
जह धम्मज्झाणवुड्ढी तहा इमं होइ कायव्वं७८ ॥"

ऐदम्पर्यार्थत ऐदम्पर्यार्थमाश्रित्य, सर्वत्रसमयनीतिराग-

---

७८ तस्माद्यथा न देहपीडा न चापि विमांसशोणितत्वं च ।
यथा धर्मध्यानवृद्धि र्वा तथायं भवति कर्त्तव्य ॥

मनीतिरेव इष्टाऽभिमता, तस्या एव सर्वत्राधिकार्यनधिकार्यादि-विभागप्रदर्शनहेतुत्वात् ॥१६७॥

वाक्यान्तरमप्यधिकृत्याह—

**दाणपसंसणिसेहे पाणवहो तह य वित्तिपडिसेहो।**
**एत्थ पयत्थो एसो जं एए दो महापावा ॥१६८॥**

दानप्रशंसायां प्राणवधस्तन्निषेधे च वृत्तिप्रतिषेधः एतेनेदं सूत्रकृतांगसूत्रं लक्ष्यते—

"जे उ दाणं पसंसंति वहमिच्छंति पाणिणं।
जे अ णं पडिसेहंति वित्तिच्छेयं कुणंति ते[७७] ॥"

इति। अत्र एषः पदार्थे, यदेतौ द्वौ दानप्रशंसानिषेधौ, महापापावशुभगतिलाभान्तरायादिप्रवलपापप्रकृतिवन्धहेतुत्वादिति ॥१६८॥

**वक्कत्थो पुण एवं विच्छेओ होज्ज देसणाईणं।**
**एयं विसेसविसयं जुज्जइ भणिअं तु वोत्तुं जे ॥१६९॥**

वाक्यार्थः पुनरेवभ्युपगम्यमाने, देशनादीनां पात्रापात्रादि-विषयदानविधिनिषेधादिदेशनादीनां विच्छेदः स्यात्—

"धर्मस्यादिपदं दानं दानं दारिद्र्यनाशनम्।
जनप्रियकरं दानं दानं सर्वार्थसाधनम् ॥१॥
वीजं यथोपरे क्षिप्तं न फलाय प्रकल्प्यते।
तथाऽपात्रेषु यद्दानं निष्फलं तद्विदुर्बुधाः ॥२॥"

इत्यादिदेशनाप्रवृत्तौ जीवहिंसानुमतिलाभान्तरायप्रसङ्गस्य

---

७७ ये तु दानं प्रशंसन्ति वधमिच्छन्ति प्राणिनाम्।
ये चनं प्रतिषेधन्ति वृत्तिच्छेद कुर्वन्ति ते ॥

र्थानुल्लंघनं, अतिदेशमाह---एवमुपदर्शितप्रकारेण, प्रतिसूत्रं यावन्ति सूत्राण्यंगीकृत्य, प्रायशो व्याख्यानं युक्तं अतिसंक्षिप्तरुचिश्रोत्राद्यपेक्षया प्रायश इत्युक्तम् ॥१७१॥

कुत एतदित्यत आह—

**एवं सम्मन्नाणं दिट्ठेट्ठविरोहनाणविरहेण ।**
**अण्णयरगमा कासइ सुअमिहरो कासइ अनाणं ॥१७२॥**

एवं प्रतिसूत्रमुक्तक्रमेण व्याख्याने, सम्यग्ज्ञानं व्युत्पन्नस्य निराकांक्षप्रतीतिरूपं स्यात् । इत्थमेव खल्वेतत् श्रुतचिन्ताभावनात्मकत्वेन परिपूर्णतामास्कन्दति । तल्लक्षणं चेदम्—

"वाक्यार्थमात्रविषयं कोष्ठकगतबीजसन्निभं ज्ञानम् ।
श्रुतमयमिह विज्ञेयं मिथ्याभिनिवेशरहितमलम् ॥१॥
यत्तु महावाक्यार्थजमतिसूक्ष्मसुयुक्तिचिन्तयोपेतम् ।
उदक इव तैलबिन्दुर्विसर्पि चिन्तामयं तत् स्यात् ॥२॥
ऐदम्पर्यगतं यद्विध्यादौ यत्र तत्तथैवोच्चैः ।
एतच्च भावनामयमशुद्धसद्रत्नदीप्तिसमम् ॥३॥" इति ।

इतरथा एवं व्याख्यानाभावे, अन्यतरगमादेकतरमर्थमार्गमनन्तगमश्रुतमध्यपतितमाश्रित्य कस्यचिद्विपरीताभिनिवेशरहितस्य श्रोतुः दृष्टेष्टविरोधज्ञानविरहेण शास्त्रेतरमानशास्त्रान्यतरविरुद्धत्वज्ञानाभावेन श्रुतं अप्रामाण्यज्ञानानास्कन्दितश्रुतज्ञानमात्रं भवति, न तु चिन्ताभावनाभ्यां परिपूर्णम् । कस्यचित्तु विपरीताभिनिवेशवतः श्रोतुः अज्ञानं, विरुद्धत्वेनाप्रामाण्यज्ञानास्कन्दितत्वात्तत्त्वतोऽज्ञानमेव तत् स्यात् ॥१७२॥

ननु वाक्यार्थादिभेदेन श्रुतज्ञानस्य कथं पूर्णता वाक्यार्थादेज्ञानस्य मतिरूपत्वादित्याशङ्क्य समाधत्ते—

दृष्टान्तेन, तस्य हि मार्गजिज्ञासार्थं दूरे पुरुषमात्रमज्ञातविशेषं दृष्ट्वा सहसा तत्समीपगमनं न संभवति कदाचिच्छत्रुरपि भवेदयमिति संदेहात्, नापि तस्य परिव्राजकादिवेषधारिणोऽपि समीपे पथपृच्छार्थं गमनं युक्तं, शत्रोरपि पथिकविश्वासनार्थं तथाविधवेषप्रतिपत्तेः संभाव्यमानत्वात्। बालवृद्धादिभ्यः सत्यवादितयाऽनुमतेभ्यः पृच्छायोग्यं तु पुरुषं ज्ञात्वाऽनुकूले मनःपवनशकुनादिना निरुपद्रवमार्गपरिज्ञानार्थं तत्समीपगमनं युज्यते, एवं ह्यत्र पुरुषमात्रदर्शनतुल्यः पदार्थः, शत्रुवेषभेददर्शनतुल्यो वाक्यार्थः, बालादिभ्यः प्रामाणिकपुरुषावगमनतुल्यो महावाक्यार्थः, ऐदम्पर्यार्थस्तु शुद्धोऽधिकारी प्रष्टव्य इति द्रष्टव्यम् ॥१५६॥

पदार्थादीनामेव संभूय कार्यकारित्वं व्यवस्थापयति—

एत्थ पयत्थाईणं मिहो अवेक्खा हु पुण्णभावंगं ।
लोअंमि आगमे वा जह वक्कत्थे पयत्थाणं ॥१५७॥

अत्र पदार्थादिष्वर्थभेदेषु, पदार्थादीनां मिथः परस्परमपेक्षा क्रमिकोत्पादरूपा, पूर्णभावांगं एकोपयोगाश्रययावत्पर्यायसिद्धिनिबन्धनम्, लोके आगमे वा यथा वाक्यार्थे पदार्थानाम्। अथ वाक्यार्थप्रतीतौ पदार्थप्रतीतीनां हेतुत्वात्तत्र तदपेक्षा युज्यते, प्रकृते तु पदार्थादीनामैदम्पर्यार्थपर्यवसन्नत्वेन कार्यान्तराभावात् क्व मिथोऽपेक्षास्त्विति चेत्, न, यावत्पदार्थप्रतीतीनामेव वाक्यार्थप्रतीतित्वेन तेषां परस्परमपेक्षावत्पदार्थादीनां परस्परमपेक्षोपपत्तेः, सापेक्षपदार्थादिसमुदायात्मकोपयोग एव तदावरणक्षयोपशमहेतुत्वात् ॥१५७॥

तत्र लोक एव तावत्पदार्थादीनां मिथोऽपेक्षां व्युत्पादयति—

पुरओ चिट्ठइ रुक्खो इय वक्काओ पयत्थबुद्धीए ।
ईहावायपओअणबुद्धीओ हुंति इयराओ ॥१५८॥

पुरतस्तिष्ठति वृक्ष इति वाक्यात्, पदार्थबुद्ध्या मदभिमुखदेशस्थित्याश्रयो वृक्ष इत्याकारया, ईहापायप्रयोजनविषया इतरा वाक्यार्थमहावाक्यार्थैदम्पर्यार्थधीरूपा बुद्धयो भवन्ति। तथाहि—अग्रे वृक्षस्तिष्ठतीति प्रतीत्यनन्तरं वृक्षो भवन्नयं किमाम्रो वा स्यान्निम्बो वेति वाक्यार्थप्रतीतिः प्रादुर्भवति, ततः प्रतिविशिष्टाकारावलोकनेनाम्र एवायमिति महावाक्यार्थधीः स्यात्, ततः पुरःसरमाम्रार्थिना प्रवर्त्तितव्यमित्यैदम्पर्यार्थधीरिति। न ह्येवं प्रकारं विना निराकांक्षप्रतीतिः सिद्ध्येत्, पदार्थमात्रज्ञानात् पदार्थस्मारितविशेषार्थजिज्ञासारूपाया आकांक्षाया अनुच्छेदाद्वाक्यार्थस्याऽपर्यवसितत्वात् ॥१५८॥

आगमेऽपि तामाह—

हंतव्वा नो भूआ सव्वे इह पायडो च्चिय पयत्थो।
मणमाईहिं पीडं सव्वेसिं चेव ण करिज्जा॥१५९॥

सर्वाणि भूतानि न हन्तव्यानि। इह प्रकट एव पदार्थः मनआदिभिर्मनोवाक्कायैः, पीडां बाधाम्, सर्वेषामेव समस्तानामपि जीवानाम्, न कुर्यान्न विदध्यादिति॥१५९॥

आवन्नमकरणिज्जं एवं चेइहरलोचकरणाई ।
इय वक्कत्थो अ महावक्कत्थो पुण इमो एत्थ ॥१६०॥

एवं सति चैत्यगृहलोचकरणादिकमकरणीयं साधुश्राद्धानामकर्त्तव्यं आपन्नं, तत्रापि परपीडानुगमात्, इत्येष वाक्यार्थश्चालनागम्यः, महावाक्यार्थः पुनरत्रायम्॥१६०॥

अविहिकरणंमि दोसो तो विहिणा चेव होइ जइअव्वं ।
अइदंपज्जत्थो पुण आणा धम्मंमि सारोत्ति ॥१६१॥

अविधिकरणेऽनीतिविधाने चैत्यगृहलोचादेः दोषो हिंसापत्तिविधिकरणनान्तरीयकासत्प्रवृत्तिनिवृत्तिपरिणामजनितस्याहिंसानुबन्धस्य प्रच्यवात्, तत्तस्माद्विधिनैव यतितव्यं भवति चैत्यगृहलोचाद्यर्थे। तदिदमुक्तम्—

"अविहिकरणंमि आणाविराहणा दुट्ठमेव एएसिं ।
तो विहिणा जइअव्वं ति[७३] ॥"

चैत्यगृहकरणविधिश्च—

"जिनभवनकारणविधिः शुद्धा भूमिर्दलं च काष्ठादि ।
भृतकानतिसन्धानं स्वाशयवृद्धिः समासेन" ॥

इत्यादिग्रन्थोक्तः, लोचकर्मविधिस्तु—

"धुवलोओ अ जिणाणं वासा वासेसु होइ थेराणं ।
तरुणाणं चउमासे वुड्ढाणं होइ छम्मासे[७४] ॥"

इत्याद्युक्तः । ऐदम्पर्यार्थः पुनराज्ञा धर्मे सार इति तामन्तरेण धर्मबुद्ध्यापि कृतस्य निरवद्यत्वाभिमतस्यापि कार्यस्य निष्फलत्वादिति ॥१६१॥

वाक्यान्तरमधिकृत्याह—

---

७३ अविधिकरणे आज्ञाविराधना दुष्टमेवैतेषाम् ।
तस्माद्विधिना यतितव्यमिति ॥

७४ ध्रुवलोचश्च जिनानां (जिनकल्पिनां) वर्षावर्षेषु भवति स्थविराणाम् ।
तरुणानां चतुर्मासे वृद्धानां भवति षण्मासे ॥

गंथं चएज्ज एत्थ वि सच्चेअणाचेअणं चए वत्थुं ।
एस पयत्थो पयडो वक्कत्थो पुण इमो होइ ।१६२।

ग्रन्थं त्यजेदित्यत्रापि सचेतनमचेतनं च वस्तु त्यजेन्न गृह्णीयादिति, एप प्रकटः पदार्थः, वाक्यार्थः पुनरयं च वक्ष्यमाणलक्षणो भवति ॥ १६२ ॥

वत्थाईण अगहणं एवं पत्तं मुणीण अविसेसा ।
आणाचाए दोसो नण्णह वत्थाइगहणे वि ॥१६३॥

एवं सति ग्रन्थमात्रग्रहणनिषेधे , मुनीनामविशेपाद्वस्त्रादीनामग्रहणं प्राप्तं, न हि स्वर्णादिकं ग्रन्थो वस्त्रादिकं च न ग्रन्थ इति विशेपोऽस्ति, आज्ञात्यागे, "जिणाण वारसरूवो उ७१ " इत्यादिवचनोल्लंघने वस्त्रादिग्रहणेऽपि दोपोऽतिरिक्तोपकरणस्याधिकरणरूपत्वात् नान्यथा आज्ञाया अत्यागे वस्त्रादिग्रहणेऽपि दोपः ॥१६३॥

एयमगहणं भावा अहिगरणच्चायओ मुणेअव्वं ।
एसमहावक्कत्थो अइदंपज्जं तु पुव्वुत्तं ।१६४।

यत एतद् वस्त्रादिग्रहणम्, भावात्तत्त्वतोऽधिकरणत्यागत आर्त्तध्यानादिपरिहारादग्रहणम्, मुणेअव्वंति ज्ञातव्यम्,अग्रहणपरिणामोपष्टंभकं ग्रहणमपि खल्वग्रहणमेव, एष महावाक्यार्थः, ऐदम्पर्यन्तु पूर्वोक्तं आज्ञैव सर्वत्र धर्म्मे सार इति ॥१६४॥

---

७१ जिनानां (जिनकल्पिनां) द्वादशरूपस्तु ॥

**वक्कत्थाइमइ च्चिय ईहाइत्तेण तेण कह सद्दं।**
**भण्णइ सद्दत्थमइं सुअनाणब्भंतरं विंति ॥१७३॥**

वाक्यार्थादिमतिरेवेहादित्वेनेहादिरूपत्वाद्विशेषधर्मस्य सामान्यधर्मव्याप्यत्वात्, तेन कथं शाब्दं वाक्यार्थादिज्ञानम्। भण्यतेऽत्रोत्तरं दीयते, शब्दार्थमतिं शब्दप्रयोज्यां मतिं श्रुतज्ञानाभ्यन्तरां ब्रुवते सिद्धान्तवृद्धाः। अत एव समानाक्षरलाभानां चतुर्दशपूर्वविदामपि षट्स्थानपतितत्वं मतिभेदेन श्रूयते। तथा चोक्तं बृहत्कल्पभाष्ये—

"अक्खरलंभेण समा ऊणहिया हुंति मइविसेसेहिं।
ते वि य मइविसेसा सुअनाणब्भंतरे जाण[८०]॥"

न चैवमुपयोगसांकर्यं, यावत्कालं श्रुतव्यापारस्तावत्तदुपयोगस्यैव संभवात् तत्सामग्र्या बलवत्त्वात्, अत एव श्रुतनिश्रितमतिज्ञानकालेऽपि श्रुतात्यय एव व्युत्पादितो विशेषावश्यकादाविति ध्येयम् ॥१७३॥

इदमेव प्रतीत्योपपादयति—

**एत्तो च्चिय उववज्जइ सद्दा जाणामि एअमट्ठंति।**
**णियसरिसं सुअनाणं काउं इय होइ उवएसो ॥१७४॥**

इत एवोपपद्यते शब्दादेनमर्थं जानामीति। नहीयं धीः शब्दोत्तरकालविचारस्य मानसादित्वे घटते, उपनीतज्ञानादौ लौकिकविषयताद्यभावात् साक्षात्करोमीत्यादिप्रतीतिपरिहारेऽपि तत्र शाब्दयामीति प्रतीतेः समाधातुमशक्यत्वात्। न चात्र शब्द-

---

८० अक्षरलाभेन समा ऊनाधिका भवन्ति मतिविशेषैः।
तेऽपि च मतिविशेषाः श्रुतज्ञानाभ्यन्तरे जानीहि॥

प्रयोज्यत्वमुपाधिभूतमेव विषयः, बाधकं विना स्वभावभूतस्यैव शाब्दत्वस्य तत्र विषयत्वात्, इत्यमुना प्रकारेण, निजसदृशं पदार्थादिभेदेन पूर्णं श्रुतज्ञानं कर्तुमुपदेश उक्तक्रमानुविद्धसूत्रदेशनात्मा भवति। यथास्वज्ञानमेव योग्ये श्रोतरि हितार्थिनामुपदेशप्रवृत्तेरिति द्रष्टव्यम् ॥१७४॥

नन्वेवं पूर्णस्वज्ञानानुसारिण उपदेशाच्छ्रुतज्ञानमेव पूर्णं श्रोतुः स्यात्, न तु चिन्ताभावनात्मकं स्वविचारार्जितविशिष्टतरसंस्कारजन्यत्वाच्चिन्ताभावनयोरित्याशङ्क्य समाधत्ते–

**एवंपि सुअं अहिअं कह चिंताभावणप्पगं होउ।**
**भण्णइ तारिसणियमइवित्थारे जुज्जइ तहत्तं ॥१७५॥**

एवमपि पूर्णोपदेशेऽपि, श्रुतमधिकं यथाश्रुतार्थश्रोत्रपेक्षया स्यात्, चिन्ताभावनात्मकं तत्कथं भवतु, भण्यते तादृशनिजमतिविस्तारे श्रुतानुसृतस्वमतिप्रपञ्चे, युज्यते तथात्वं चिन्ताभावनात्मकत्वं, श्रुतपर्यायक्रमेण यथोत्तरं क्षयोपशमवृद्धेस्तन्नियामकत्वात् ॥१७५॥

ननु ज्ञानस्य क्षणिकत्वात् कथं बहुवेलः पदार्थाद्युपयोग इति नैयायिकाद्याशङ्कां निराकुर्वन्नाह–

**दीहो उवओगद्धा तहा खओवसमओ अ एगत्तं।**
**तेण न संकरदोसो एवं नाणंतरे होइ ॥१७६॥**

दीर्घो यथोचितबहुसमयावच्छिन्नः, उपयोगाद्धा श्रुतोपयोगकालस्तथा श्रुतोपदेशात्तथानुभवाबाधाच्च। ननु पदार्थवाक्यार्थादिविचारणानामेकोपयोगत्वे धूमप्रत्यक्षवह्न्यनुमित्यादीनामप्येकोपयोगत्वापत्तिरित्यत आह-तथाक्षयोपशमतश्चैकोपयोगहेतुक्षयोप-

अंगांगिभावेन सामान्यविशेषोभयविषयतयैवोपयोगस्य पर्यवसानात्, अन्यत्राप्यवग्रहेहादिभावेन तथा पर्यवसानदर्शनादिति दिक् ॥१७७॥

तदेवं पदार्थादिभेदेन चतुर्द्धा सूत्रव्याख्या व्यवस्थिता एतज्जन्यं तत्त्वज्ञानमेव च गुर्वायत्तः शुद्धाज्ञायोगलाभः परम इष्टप्राप्तिहेतुरित्याह–

**एवं सम्मन्नाणं आणाजोगो उ होइ परिसुद्धो ।**
**जं नाणी निच्छयओ इच्छियमत्थं पसाहेइ ॥१७८॥**

एवमुक्तक्रमेण, सम्यक् परिपूर्णं ज्ञानं भवति, एतदेवाज्ञायोगस्तु परिशुद्धो भवति, यद् यस्मात्, ज्ञानी ईप्सितमर्थं प्रसाधयति, प्रतिबन्धशतोपनिपातेऽपि तत्तद्द्रव्यक्षेत्राद्यनुकूलप्रवृत्त्या कार्यान्तराविरोधेन साध्यसिद्धेरप्रत्यूहात् भावानुवृत्त्या बहूनां मार्गप्रदानबीजाधानकरणादिना तदनुबन्धप्रवृत्तेश्च ॥१७८॥

यत एवं ज्ञानी स्वपरयोरिष्टसाधकोऽतः स एव प्रमाणीकर्त्तव्यः परलोकार्थिनेत्याह–

**एसो चेव पमाणीकायव्वो णेवमप्पगहियत्ता ।**
**धम्मस्सत्थिलहुत्तं जं थोवो रयणवावारो ॥१७९॥**

एष एव ज्ञान्येव प्रमाणीकर्त्तव्यो निश्शङ्कमेतद्वचनानुसारेणैव प्रवृत्तिर्विधेयेति भावः। अत्रार्थे दोषमाशङ्क्य निराकुरुते–एवं ज्ञानिन एव प्रमाणीकर्त्तव्यत्वे, ज्ञानिनामल्पत्वाद्धर्मस्याल्पगृहीतत्वाल्लघुत्वमनादेयत्वं न शङ्कनीयम्, यद् यस्माल्लोकेऽपि रत्नव्यापारः स्तोक एव दृश्यते, न चायमनादेयः, तस्माद् व्यापारस्यादेयतायां विवेकपूर्वत्वमेव प्रयोजकं न तु बहुपरिगृहीतत्वमिति भावः। न चेदेवं बहुजनपरिगृहीतो लोकधर्मो न त्याज्यः स्यात्, तदुक्तम्–

"बहुजणपवित्तिमेत्तं इत्थं तेहिं इहलोइओ चेव ।
धम्मो न उज्झियव्वो छेएण तहि बहुजणपवित्ति[८१] ॥
ता आणाणुगयं जं तं चेव बुहेण सेवियव्वं तु ।
किमिह बहुणा जणेणं हंदि ण सेयत्थिणो बहुआ[८२] ॥
रयणत्थिणोत्ति थोवा तद्दायारो वि जह उ लोअंमि ।
इह सुद्धधम्मरयणत्थिदायगा दढयरं णेआ[८३]" ॥१७९॥

अल्पैरपि ज्ञानिभिः परिगृहीतो धर्मो बहुकार्यकारित्वात्तत्त्वतो बहुपरिगृहीत एवेत्यप्याह—

**बहवे जीवंति तओ तेण इमो चेव बहुपरिग्गहिओ ।**
**ता नाणिपरिग्गहिए धम्मे नियमेण जइअव्वं ॥१८०॥**

बहवो जीवन्ति ततो रत्नव्यापारादिव धर्मव्यापारात्, तेनायमेव ज्ञानिपरिगृहीतो धर्म एव, बहुपरिगृहीतो भवति, तत्तस्मात्, ज्ञानिपरिगृहीते धर्मे, नियमेन निश्चयेन, यतितव्यम् ॥१८०॥ ननु दुष्करो ज्ञानिपरिगृहीतो धर्मः कथं तत्र श्रोतुः प्रवृत्तिः स्यादित्याशङ्क्य समाधत्ते—

**ण य दुक्करंमि धम्मे उवदेसाओ वि कह भवे जत्तो ।**
**णो दुक्करो जमेसोहिगारिणो जम्मभीअस्स ॥१८१॥**

न च दुष्करे धर्मे, उपदेशादपि उपदेशं श्रुत्वापि, कथं

---

८१ बहुजनप्रवृत्तिमात्रमत्र तैरिह लौकिकश्चैव ।
धर्मो नोज्झितव्यश्छेकेन तत्र बहुजनप्रवृत्तिः ॥

८२ तस्मादाज्ञानुगतं यत्तच्चैव बुधेन सेवितव्यं तु ।
किमिह बहुना जनेन हन्दि न श्रेयार्थिनो बहवः ॥

८३ रत्नार्थिन इति स्तोकाः तद्दातारोऽपि यथा तु लोके ।
इह शुद्धधर्मरत्नार्थिदायका दृढतरं ज्ञेयाः ॥

भवेत् यत्न इति शङ्कनीयम्, यद् यस्मादधिकारिणो मोक्षाभिलाषिणः, जन्मभीतस्य संसारभयवतः, नैष धर्मः दुष्करः फले उत्कटेच्छासत्त्वे तदुपायज्ञानवतस्तदुपायप्रवृत्तौ विलम्बस्यायोगात्, तस्योत्कटेच्छाऽभावभावप्रयोज्यत्वाद्भवति च भववैराग्यान्मोक्षेच्छाया उत्कटत्वमतस्तद्वतो न मोक्षोपायानुष्ठानस्य दुष्करत्वमिति। तदिदमुक्तम्—

"भवस्वरूपविज्ञानात्तद्विरागाच्च तत्त्वतः।
अपवर्गानुरागाच्च स्यादेतन्नान्यथा क्वचित् ॥" इति ॥१८१॥

इत्थमधिकारिणो धर्मस्य न दुष्करत्वमिदमुक्तं, अनधिकारिणस्तु दुष्कर एवायमित्याह—

**अपरिणए धम्मंमी नाऽभव्वो संसयाइणा कुणइ।**
**बद्धनिकाइअकम्मा तहा न एयं कुणइ जीवो ॥१८२॥**

अपरिणते सम्यग्ज्ञानाभावेन मोक्षोपायतयाऽनिष्टे, धर्मे, अभव्यो यथा संशयादिना न करोत्येनं धर्म आदिना विपर्ययानध्यवसायग्रहः, तथा बद्धमनन्तरं निकाचितं च सकलकरणायोग्यत्वेन व्यवस्थापितं कर्म चारित्रमोहाख्यं येनैतादृशः, जीवः सत्यकिविद्याधरादिवत् परिणतजिनप्रवचनोऽपि नैतं धर्म करोति, धर्मानुष्ठानहेतुभूताया उत्कटफलेच्छाया मिथ्यात्वमोहेनेव चारित्रमोहेनापि विघटनाविशेषात् ॥१८२॥

यद्येवं बद्धनिकाचितकर्माणं प्रति धर्मानुष्ठानमजनयत उपदेशस्य नैःफल्यम्, तदा जिनोपदेशस्य सर्वसाधारण्यानुपपत्तिरित्याशङ्कायामाह—

**एवं जिणोवएसो विचित्तरूवोऽपमायसारो वि।**
**उचितावेक्खाइ च्चिय जुज्जइ लोगाण सव्वेसिं ॥१८३॥**

एवं बद्धनिकाचितकर्मणा धर्माननुष्ठाने, अप्रमादसारोऽपि

पुरस्कृताप्रमादोऽपि, जिनोपदेशः सर्वेषां लोकानाम्, उचितापेक्षयैव योग्यतानतिक्रमेणैव, विचित्ररूपो नानातात्पर्यको युज्यते ये यावद्धर्मयोग्यास्तेषां तावन्मात्रप्रवर्त्तनेनैव चरितार्थत्वात्, तत्रापुनर्बन्धकादयः केचित् सामान्यदेशनाया योग्याः, केचित् सम्यग्दृष्टिगुणयोग्यप्रज्ञापनायाः, केचिद्देशविरतिगुणस्थानकार्हप्ररूपणायाः, केचिच्च निर्द्धूतचारित्रमोहमालिन्या अप्रमत्ततारूपप्रव्रज्यादेशनाया इति ॥१८३॥

अप्रमत्ततायाएव सर्वसाधारणस्यापि जिनोपदेशस्य पुरस्करणे तु उपपत्तिमाह—

जह निव्विग्घं सिग्घं गमणं मग्गण्णुणो णगरलाभे ।
हेऊ तह सिवलाभे निच्चं अपमायपरिवुड्डी ॥१८४॥

यथा निर्विघ्नं व्याक्षेपत्यागेन, शीघ्रमविलम्बेन, मार्गज्ञस्य गमनं पथः प्रध्वरवक्रादिप्रदेशवेत्तुः, नगरलाभे हेतुः, तथा नित्यं सर्वदाऽप्रमादपरिवृद्धिः प्रव्रज्याप्रतिपत्तिकालादारभ्योत्तरोत्तरगुणस्थानारोहक्रमेण प्रवर्द्धमानपरिणामरूपा, शिवलाभे हेतुः, अत एव यावन्तं कालं न मूलोत्तरगुणस्खलना तावानेव कालो निश्चयतः प्रव्रज्यापर्यायः परिगण्यते, तदुक्तमुपदेशमालायाम्—

"न तहिं दिवसा पक्खा मासा वरिसा व से गणिज्जंति ।
जे मूलउत्तरगुणा अक्खलिआ ते गणिज्जंति ८४ ॥

इत्थं चाप्रमत्ततैव सर्वत्र भगवता प्रशस्तेत्युपपन्नम् ॥१८४॥

एतदेव निगमयन् प्रतिबन्धेऽप्येतदत्यागोपदेशमाह—

---

८४ न तत्र दिवसाः, पक्षाणि, मासा, वर्षाणि वा तस्य गण्यन्ते ।
ये मूलोत्तरगुणा अस्खलितास्ते गण्यन्ते ॥

एयं चिय इह तत्तं णवरं कालोवि एत्थ पडिवक्खो ।
तहवि य परमत्थविऊ खलंति णो णियपइन्नाओ ॥१८५॥

एतदेवाप्रमादपुरस्करणमेव, इह धर्मे, तत्त्वमुपनिषद्भूतम्, नवरं केवलम्, कालोऽपि दुःषमालक्षणः, किं पुनश्चारित्रमोहक्षयोपशममन्दतेत्यप्यर्थः, अत्राप्रमादपुरस्करणे, प्रतिबन्धकः सिद्धिलक्षणफलं प्रत्येकादिभवव्यवधानकारित्वेन तथाविधाऽप्रमादविघटकत्वात्तस्य, न चैवमेतदालंबनेनैव संयमादरत्यागो विधेय इत्याह-तथापि, परमार्थविदो यथावदायव्ययस्वरूपज्ञाः, निजप्रतिज्ञातेन न स्खलन्ति किन्तु कालबलमपि निजवीर्योल्लासेन निहत्य यथाशक्ति स्वप्रतिज्ञानुसारेण प्रवर्त्तन्त एव धर्मकर्मणीति भावः ॥१८५॥

इत्थं च भावानुज्ञानुसृतं पुरस्कृताप्रमादमेव धर्मानुष्ठानमिति व्यवस्थितं अत्रैव मतान्तरमुपन्यस्यन्नाह—

अण्णे धम्मब्भासं सययविसयभावजोगओ बिंति ।
णिच्छयओ तमजुत्तं जुज्जइ ववहारओ णवरं ॥१८६॥

अन्ये आचार्याः, धर्माभ्यासं सततविषयभावयोगतो ब्रुवते सतताभ्यासविषयाभ्यासभावाभ्यासभेदात्त्रिविधं धर्मानुष्ठानमित्यर्थः। तत्र नित्यमेवोपादेयतया लोकोत्तरगुणावाप्तियोग्यतापादकमातापितृविनयादिवृत्तिः सतताभ्यासः, मोक्षमार्गस्वामिन्यर्हदादौ पूजादिकरणाभ्यासो विषयाभ्यासः, सम्यग्दर्शनादीनां भावानां भवोद्वेगपूर्वमभ्यासश्च भावाभ्यासः। फलसन्निधानभेदात् यथोत्तरं प्राधान्यं चात्र द्रष्टव्यम्। तदाह-

"अण्णे भणंति तिविहं सययविसयभावजोगओ णवरं ।

धम्मंमि अणुट्ठाणं जहुत्तरपहाणरूवं तु ८५" ॥

तदेतद्दूषयति– तदुक्तमतं निश्चयतो निश्चयनयमाश्रित्य अयुक्तं, साक्षाद्दर्शनाद्यनाराधनारूपे मातापित्रादिविनयस्वभावे कर्मणि भववैराग्यादिभावाभावेन परमार्थोपयोगरूपधर्मानुष्ठानत्वस्य वक्तुमशक्यत्वात्, तदिदमाह—

"एयं च ण जुत्तिखमं णिच्छयणयजोगओ जओ विसए।
भावेण य परिहीणं धम्माणुट्ठाणमो किह णु ८६॥"

दूषितमप्येतन्मतं कथञ्चित् समर्थयन्नाह– नवरं केवलं व्यवहारतो व्यवहारनयमाश्रित्य युज्यते ॥१८६॥

अत्र हेतुमाह–

**तिविहंपि भावभेआ चित्तफलं अपुणवंधगाईणं।**
**जं एयं एत्थं पुण तहभव्वत्तं परो हेऊ ॥१८७॥**

त्रिविधमपि सतताभ्यासाद्यनुष्ठानम्, भावभेदान्मनःपरिणामनानात्वादपुनर्वन्धकादीनामादिना मार्गाभिमुखमार्गपतितग्रहः, यद् यस्मादेतच्चित्रफलं नानाविधाशयवृद्धिकरम्। न ह्येवमपुनर्वन्धकादिभावेन क्रियमाणस्य सतताभ्यासादेरप्युचितोचितप्रवृत्त्यनुवन्धेन भावाज्ञायोग्यतागर्भत्वात्तात्त्विकव्यवहारदृष्ट्याऽयुक्तत्वमीक्षामहे। तदिदमुक्तमुपदेशपदे–

ववहारओ उ जुज्जइ तहा तहा अपुणवंधगाईणं ८७"

तथा–

---

८५ अन्ये भणन्ति त्रिविधं सततविपक्षभावयोगतो नवरम्।
धर्मेऽनुष्ठानं यथोत्तरप्रधानरूपन्तु॥

८६ एतच्च न युक्तिक्षम निश्चयनययोगतो यतो विषये।
भावेन च परिहीनं धर्मानुष्ठानं कथं नु॥

८७ व्यवहारतस्तु युज्यते तथा तथापुनर्वन्धकादीनाम्।

"सम्माणुट्ठाणं चिय ता सव्वमिणंति तत्तओ णेयं।
ण य अपुणवंधगाइं मोत्तुं एयं इहं होइ ८८" ॥

अन्यत्राप्युक्तम्–
"एवंभूतस्य या प्रवृत्तिः सा सर्वैव साध्वीति।"

तदेवं सिद्धमेतदपि धर्मानुष्ठानम्। अत्रासाधारणं नियामकमाह–अत्र पुनः पर उत्कृष्टः, हेतुस्तथाभव्यत्वं तत्परिपाकार्थमेवेतरकारणकलापोपयोगात् ॥१८७॥

तथाभव्यत्वस्वरूपपरिज्ञानार्थमेवोपदेशपदगतां गाथामाह–

**तहभव्वत्तं चित्तं अकम्मजं आयतत्तमिह णेयं।**
**फलभेया तह कालाइआणमक्खेवगसहावं ॥१८८॥**

तथाभव्यत्वं चित्रं नानारूपं भव्यत्वमेवेति गम्यते, अकर्मजमकर्मनिर्मितम्, आत्मतत्त्वं साकारानाकारोपयोगवज्जीवस्वभावाभूतम्, इह विचारे, ज्ञेयमत्र हेतुः, फलभेदात्तीर्थकरगणधरादिरूपतया भव्यत्वफलस्य वैचित्र्योपलंभात्। तथेति समुच्चये, कालादीनां कालनियतिपूर्वकृतकर्मणां समग्रान्तररूपाणाम्, आक्षेपकस्वभावं संनिहितताकारकस्वभावम्। यदि च भव्यत्वमेकस्वभावं स्यात् तदा तीर्थकरसिद्धादिभेदः सिद्धान्तोक्तो विघटेत। नहि ऋजुसूत्रादयः पर्यायनयाः कारणभेदं विना कार्यभेदंमन्यन्तेऽन्यथैकस्मादेव कारणात् सकलत्रैलोक्यकार्योत्पत्तिप्रसङ्गेन कारणान्तरकल्पनावैयर्थ्यप्रसंगात्। अथ सामग्र्याः कार्यतावच्छेदकावच्छिन्नोत्पत्तिव्याप्यत्वात्तीर्थकरसिद्धत्वाद्यवच्छिन्नस्यानापत्तिरेव, न हि तीर्थकरसिद्धत्वादिकं कार्यतावच्छेदकं, अर्थसमाजसिद्धत्वात्, अन्यथा नीलघटत्वादिकमपि तथा स्यात्, तीर्थकरातीर्थकरसि-

८८ साम्यानुष्ठानं चैव तस्मात्सर्वमिदमिति तत्त्वतो ज्ञेयम्।
न चापुनर्बन्धकादि मुक्त्वा एतदिति भवति॥

द्धादिभेदाभिधानं च वैधर्म्यमात्राभिप्रायेणैवेति। भव्यत्वभेदे मानाभाव इति चेत्, न, तीर्थंकरसिद्धत्वाद्यवच्छिन्ने नियामकस्यावश्यवाच्यत्वात्, सामान्यतः क्लृप्तकारणताकतत्तद्व्यक्तीनामेव तन्नियामकत्वमिति चेत्, तादृशनियामकत्वमेव हेतुत्वमिति तावद्व्यक्तिविशेषकल्पनापेक्षया भव्यत्वविशेष एवान्तरङ्गत्वात् कल्पयितुं युक्त इति किं न विभाव्यते। विशेषरूपेण तत्तद्व्यक्तीनामन्यथासिद्धत्वान्न हेतुत्वमिति चेत्, तर्हि द्रव्यत्वेन जन्यभावत्वेनैक एव कार्यकारणभावः स्यादिति तन्तुत्वादिना कारणत्वबुद्धिव्यपदेशयोरप्रामाण्यापत्तिः, पटत्वाद्यवच्छिन्नस्याकस्मिकतापत्तेस्तत्र तन्तुत्वादिना हेतुत्वमावश्यकं अन्यथा तदवच्छिन्नसामग्र्यनिश्चये एतावत्सत्वेऽवश्यं पटोत्पत्तिरित्यनिश्चयरूपादाकस्मिकत्वात् प्रवृत्तेर्दुर्घटत्वप्रसंगात्तादृशनिश्चय एव कृतिसाध्यताधीसंभवात्, तत्पटत्वाद्यवच्छिन्नस्याकस्मिकत्वं त्विष्टमेव, तद्धर्मावच्छिन्नसामग्रीसत्त्वेऽपि तथा निश्चयायोगात्, तद्धर्मावच्छिन्ने प्रवृत्त्यभावाच्चेति चेत्,न, प्रवृत्त्यनौपयिककारणतायामेवं वक्तुमशक्यत्वात्, नियतान्वयव्यतिरेकप्रतियोगित्वरूपकारणताया विशेषरूपेणैव ग्रहसंभवाच्च, सादृश्यबुद्ध्यैव प्रवृत्त्युपपत्तेरन्यथान्वयव्यतिरेकव्यभिचारग्रहयोरविशेषेण कारणताबुद्धावप्रतिबन्धकत्वप्रसङ्गात्। एतेन विशेषान्वयव्यतिरेकाभ्यां सामान्यव्यभिचारानिर्णयानुगतागुरुविशेषान्तरानुपस्थितिलाघवादिप्रतिसंधानवशात् सामान्यत एव हेतुहेतुमद्भावग्रहात्, ग्राहकाभावादेव न विशेषकार्यकारणभावसिद्धिरित्यपास्तम्। अपि च प्रत्येकं कारणानां स्वेतरयावत्कारणसहितत्वेन यावत्कारणरूपायाः सामग्र्याश्च तत्तत्सम्बन्धेन कार्यव्याप्यत्वे गौरवादितरकारणविशिष्टचरमकारणस्यापि सामग्रीत्वे चरमकारणविशिष्टेतरकारणानां तथात्वे विनिगमकाभावात्, तत्त्वेन

"सम्माणुट्ठाणं चिय ता सव्वमिणंति तत्तओ णेयं।
ण य अपुणवंधगाइं मोत्तुं एयं इहं होइ ८८"॥

अन्यत्राप्युक्तम्—

"एवंभूतस्य या प्रवृत्तिः सा सर्वैव साध्वीति।"

तदेवं सिद्धमेतदपि धर्मोनुष्ठानम्। अत्रासाधारणं नियामकमाह—अत्र पुनः पर उत्कृष्टः, हेतुस्तथाभव्यत्वं तत्परिपाकार्थमेवेतरकारणकलापोपयोगात्॥१८७॥

तथाभव्यत्वस्वरूपपरिज्ञानार्थमेवोपदेशपदगतां गाथामाह—

**तहभव्वत्तं चित्तं अकम्मजं आयतत्तमिह णेयं।**
**फलभेया तह कालाइआणमक्खेवगसहावं॥१८८॥**

तथाभव्यत्वं चित्रं नानारूपं भव्यत्वमेवेति गम्यते, अकर्मजमकर्मनिर्मितम्, आत्मतत्त्वं साकारानाकारोपयोगवज्जीवस्वभावाभूतम्, इह विचारे, ज्ञेयमत्र हेतुः, फलभेदात्तीर्थकरगणधरादिरूपतया भव्यत्वफलस्य वैचित्र्योपलंभात्। तथेति समुच्चये, कालादीनां कालनियतिपूर्वकृतकर्मणां समग्रान्तररूपाणाम्, आक्षेपकस्वभावं संनिहितताकारकस्वभावम्। यदि च भव्यत्वमेकस्वभावं स्यात् तदा तीर्थकरसिद्धादिभेदः सिद्धान्तोक्तो विघटेत। नहि ऋजुसूत्रादयः पर्यायनयाः कारणभेदं विना कार्यभेदंमन्यन्तेऽन्यथैकस्मादेव कारणात् सकलत्रैलोक्यकार्योत्पत्तिप्रसङ्गेन कारणान्तरकल्पनावैयर्थ्यप्रसंगात्। अथ सामग्र्याः कार्यतावच्छेदकावच्छिन्नोत्पत्तिव्याप्यत्वात्तीर्थकरसिद्धत्वाद्यवच्छिन्नस्यानापत्तिरेव, न हि तीर्थकरसिद्धत्वादिकं कार्यतावच्छेदकं, अर्थसमाजसिद्धत्वात्, अन्यथा नीलघटत्वादिकमपि तथा स्यात्, तीर्थकरातीर्थकरसि-

---

८८ साम्यानुष्ठान चैव तस्मात्सर्वमिदमिति तत्त्वतो ज्ञेयम्।
न चापुनर्बन्धकादि मुक्त्वा एतदिति भवति॥

द्धादिभेदाभिधानं च वैधर्म्यमात्राभिप्रायेणैवेति। भव्यत्वभेदे मानाभाव इति चेत्, न, तीर्थकरसिद्धत्वाद्यवच्छिन्ने नियामकस्यावश्यवाच्यत्वात्, सामान्यतः क्लृप्तकारणताकतत्तद्व्यक्तीनामेव तन्नियामकत्वमिति चेत्, तादृशनियामकत्वमेव हेतुत्वमिति तावद्व्यक्तिविशेषकल्पनापेक्षया भव्यत्वविशेष एवान्तरङ्गत्वात् कल्पयितुं युक्त इति किं न विभाव्यते। विशेषरूपेण तत्तद्व्यक्तीनामन्यथासिद्धत्वान्न हेतुत्वमिति चेत्, तर्हि द्रव्यत्वेन जन्यभावत्वेनैक एव कार्यकारणभावः स्यादिति तन्तुत्वादिना कारणत्वबुद्धिव्यपदेशयोरप्रामाण्यापत्तिः, पटत्वाद्यवच्छिन्नस्याकस्मिकतापत्तेस्तत्र तन्तुत्वादिना हेतुत्वमावश्यकं अन्यथा तदवच्छिन्नसामग्र्यनिश्चये एतावत्सत्वेऽवश्यं पटोत्पत्तिरित्यनिश्चयरूपादाकस्मिकत्वात् प्रवृत्तेर्दुर्घटत्वप्रसंगात्तादृशनिश्चय एव कृतिसाध्यताधीसंभवात्, तत्पटत्वाद्यवच्छिन्नस्याकस्मिकत्वं त्विष्टमेव, तद्धर्मावच्छिन्नसामग्रीसत्त्वेऽपि तथा निश्चयायोगात्, तद्धर्मावच्छिन्ने प्रवृत्त्यभावाच्चेति चेत्, न, प्रवृत्त्यनौपयिककारणतायामेवं वक्तुमशक्यत्वात्, नियतान्वयव्यतिरेकप्रतियोगित्वरूपकारणताया विशेषरूपेणैव ग्रहसंभवाच्च, सादृश्यबुद्ध्यैव प्रवृत्त्युपपत्तेरन्यथान्वयव्यतिरेकव्यभिचारग्रहयोरविशेषेण कारणताबुद्धावप्रतिबन्धकत्वप्रसङ्गात्। एतेन विशेषान्वयव्यतिरेकाभ्यां सामान्यव्यभिचारानिर्णयानुगतागुरुविशेषान्तरानुपस्थितिलाघवादिप्रतिसंधानवशात् सामान्यत एव हेतुहेतुमद्भावग्रहात्, ग्राहकाभावादेव न विशेषकार्यकारणभावसिद्धिरित्यपास्तम्। अपि च प्रत्येकं कारणानां स्वेतरयावत्कारणसहितत्वेन यावत्कारणरूपायाः सामग्र्याश्च तत्तत्सम्बन्धेन कार्यव्याप्यत्वे गौरवादितरकारणविशिष्टचरमकारणस्यापि सामग्रीत्वे चरमकारणविशिष्टेतरकारणानां तथात्वे विनिगमकाभावात्, तर्—

जनकत्वे गौरवतादवस्थ्याच्च, निरूपकतया तथाभव्यत्वस्यैव तादात्म्येन तावद्धर्मककार्यनियामकत्वं युक्तम्। न च कालादिवैचित्र्यमेवास्त्वित्यत्र विनिगमकाभावः, देशकालोभयनियमवीजभव्यत्ववैचित्र्यस्यैव युक्तत्वात्। न चैवं पुरुषकारादिवैयर्थ्यं, तत्समवधाननियतत्वात् तथाभव्यत्वस्य, तेन तदाक्षेपात्। अत एव नोपदेशादिवैयर्थ्यमपि, तथाभव्यत्वमपेक्ष्यैव तत्प्रवृत्तेरुचितप्रवृत्त्यादिचिह्नेन तदनुमानात्। अत एव न केवलस्वभाववादसाम्राज्यम्, तथात्वस्यान्यहेत्वालीढत्वादन्यथा ऋषभवर्द्धमानादीनां स्वभावाभेदे सिद्धिकालभेदाद्यप्रसङ्गाद् भेदे चास्मन्मतप्रवेशात्। यदि च तत्कालायोग्यस्यापि सिद्धिः, स्यात्तदाऽभव्यस्यापि तत्प्रसङ्गः, कथञ्चिद्विशेषे पुनरनायत्येप्यमाणे स्यादेकं स्यादनेकं चायातं भव्यत्वं, यथा सामान्येनैकरूपमाम्रनिम्बकदंबादीनां वृक्षत्वं विशेषचिन्तायां तु रसवीर्यविपाकभेदादाम्रादीनां नानारूपमिति। अथैकस्याप्यनेककार्यजननशक्तिमत्त्वान्नानुपपत्तिरिति चेत्, न, येन स्वभावेन पूर्वकार्यजननशक्तिस्तेनैवोत्तरकार्यजननशक्तावभ्युपगम्यमानायां पूर्वोत्तरकार्ययोर्यौगपद्यप्रसङ्गात्, सर्वथैकत्वेऽनेककार्यजननशक्तिमत्त्वस्य दुर्वचत्वात्। तदिदमुक्तम्—

> इहरासमंजसत्तं तस्स तहसहावयाइ तह चित्तो।
> कालाइजोगओ नणु तस्स विवागो कहं होइ ८९॥
>
> एसो उ तंतसिद्धो एवं घडए त्ति णियमओ एवं।
> पडिवज्जेयव्वं खलु सुहुमेणं तक्कजोगेणं ९०॥

---

८९ इतरथासमंजसत्वं तस्य तथास्वभावतादि तथा चित्र।
कालादियोगतो ननु तस्य विपाक कथं भवति॥

९० एष तु तन्त्रसिद्ध. एव घटत इति नियमत एवम्।
प्रतिपत्तव्यं खलु सूक्ष्मेण तर्कयोगेन॥

एवं चिय विन्नेओ सफलो नाएण पुरिसगारो वि।
तेण तहक्खेवाओ स अन्नहा कारणो ण भवे ९१ ॥
उवएससफलयावि अ एवं इहरा ण जुज्जति तओ वि।
तह तेण अणिक्खित्तो सहाववादो बला एति ९२ ॥
को कुवलयाण गंधं कहेइ महुरत्तणं च उच्छूणं।
वरहत्थीण य लीलं विणयं च कुलप्पसूआणं ९३ ॥
एत्थ य जो जह सिद्धो संसरिओ तस्स संतियं चित्तं।
कि तस्सहावमहणो भव्वत्तं वायमुद्दिस्स ९४ ॥
जइ तस्सहावमेवं सव्वं सिद्धं जहोइयं चेव।
अह णो ण तहा सिद्धी पावइ तस्साजहण्णस्स ९५ ॥
एसाण लंघणिज्जा मा होज्जा सव्वपच्चयविणासे।
अवि य णिहालेयव्वा तह णो दोसप्पसंगाओ ९६ ॥
जइ सव्वहा अजोगो विचित्तया हंदि वीणिअसरूवा।
पावइ अतस्सहावत्तओ विसेसो अभव्वस्स९७ ॥

---

९१ एवं चैव विज्ञेय· सफलो ज्ञातेन पुरुषकारोऽपि।
तेन तथाक्षेपात् स अन्यथा कारणो न भवेत् ॥
९२ उपदेशसफलतापि च एवमितरथा न युज्यते ततोऽपि।
तथा तेनानाक्षिप्त स्वभाववादो बलादेति ॥
९३ क· कुवलयानां गन्धं कथयति मधुरत्वञ्चक्षूणाम्।
वरहस्तिनां च लीलां विनयं च कुलप्रसूतानाम् ॥
९४ अत्र च यो यथा सिद्ध सांसारिकस्तस्य सच्चित्तम्।
किं तत्स्वभावमथन· भव्यत्व वादमुद्दिश्य ॥
९५ यदि तत्स्वभावमेव सर्वं सिद्धं यथोदित चैव।
अथ नो न तथासिद्धि प्राप्नोति तस्याजघन्यस्य ॥
९६ एषाशा लंघनीया मा भवेत्सर्वप्रत्ययविनाशे।
अपि च निभालयास्तथा नो दोषप्रसङ्गात् ॥
९७ यदि सर्वथायोग्य विचित्रता हन्यपि निजस्वरूपात्।
प्राप्नोति अतत्स्वभावत्वाद्विशेषोऽभव्यस्य ॥

अह कहवि तव्विसेसो इच्छिज्जइ णियमओ तदक्खेवा ।
इच्छिअसिद्धी सव्वेसि चित्तयाए अणेगंतो[९८] ॥
अणिययसहावयावि हु ण तस्सहावत्तमन्तरेणावि ।
ता एवमणेगंतो सम्मंति कयं पसंगेण[९९] ॥" ॥१८८॥

ननु यद्येवं तथाभव्यत्वेनैव कार्यसिद्धिस्तदा किं संयमयोगव्यापारेणेत्यत आह—

तह वि खलु जयंति जई धीरा मोक्खट्ठमुज्जुआ णिच्चं ।
अइयारच्चाएणं समुदयवादं पमाणंता ॥१८९॥

तथापि तथाभव्यत्वचित्रतासत्त्वेऽपि, खलु निश्चये, यतन्ते संयमयोगे यत्नमाद्रियन्ते, यतो धीरा मोहभटरणभङ्गक्षमधैर्यवन्तः मोक्षार्थमुद्यता अभ्युत्थिताः, नित्यं निरन्तरम्, अतिचारस्य चारित्रमालिन्यवीजस्य रागद्वेषलेशलक्षणस्य त्यागेन परिहारेण, समुदयवादं कालादिकलापस्य संमत्यादिसिद्धसामग्रीत्वप्रवादम्, प्रमाणयन्तस्तथा चेष्टयोपपादयन्तः, तथाभव्यत्वं हि पुरुषकाराद्यपेक्षमेव फलोपधायकं तत्र चापुनर्वन्धकादिप्रयत्नापेक्षावश्यकीति भावः ॥ १८९ ॥

अत एवान्तरङ्गयत्न एव साधूनामपेक्षितो विचित्रभव्यत्वानुगुणत्वात् न तु वहिरङ्ग एवेति द्रढयन्नाह—

जत्तो अ अंतरंगो अज्झप्पज्झाणजोगओ जुत्तो ।
जं एसो च्चिय सारो सयलंमि वि जोगसत्थंमि ॥१९०॥

यत्नश्चान्तरङ्गोऽध्यात्मध्यानयोगत आत्मन्येवैकाग्रचित्त-

---

९८ अथ कथमपि तद्विशेष इष्यते नियमतस्तदाक्षेपात् ।
इष्टसिद्धिः सर्वेषां चित्रतयानेकान्तः ॥

९९ अनियतस्व तापि खलु न तत्स्वभावत्वमन्तरेणापि ।
तस्मादेवमनेकान्तः गिति कृत प्रसङ्गेन ॥

व्यापाराद् विद्यमानक्लिष्टचित्तनिरोधलक्षणोपेक्षासंयमाद् युक्तः। यद् यस्मादेष एवाध्यात्मध्यानयोग एव, सकलेऽपि योगशास्त्रे सारः परमसंवररूपस्याध्यात्मध्यानस्यैव सकलशास्त्रोपनिषद्भूतत्वात्। तदुक्तम्—

"आश्रवो भवहेतुः स्यात् संवरो मोक्षकारणम्।
इतीयमार्हती मुष्टिरन्यदस्याः प्रपञ्चनम्॥" इति॥१९०॥

अध्यात्मध्यानयोगस्यैव फलमभिष्टौति—

**एअंमि परिणमंते आणंदस्सावि होइ परिवुड्ढी।**
**एवं चिय साहूणं जीवन्मुत्तत्तणं जुत्तं॥१९१॥**

एतस्मिन्नध्यात्मध्याने, परिणमत्येकांगीभावमागच्छति। आनंदस्यापि साम्यसुखस्यापि, परिवृद्धिर्भवति, साम्यध्यानयोर्मिथो निष्कंपताबीजत्वात्। तदुक्तम्—

"न साम्येन विना ध्यानं न ध्यानेन विना च तत्।
निष्कम्पं जायते तस्माद् द्वयमन्योन्यकारणात्॥"

इत्येवमेव च साधूनां जीवन्मुक्तित्वं युक्तं, जीवित्वे सति सांसारिकानन्दातिशयितानन्दाऽभिव्यक्तेरेव जीवन्मुक्तिपदार्थत्वात्। तदिदमभिप्रेत्योक्तम्—

"निर्जितमदमदनानां वाक्कायमनोविकाररहितानाम्।
विनिवृत्तपराशानामिहैव मोक्षः सुविहितानाम्॥
तथा—नैवास्ति राजराजस्य तत्सुखं नैव देवराजस्य।
यत्सुखमिहैव साधोर्लोकव्यापाररहितस्य" ॥इति॥ १९१॥

अध्यात्मपरिणतिक्रमादानन्दवृद्धिक्रमे भगवतीसम्मतिमाह-

भणिअं च भगवईए मासाइक्कमेण वंतराईणं।
वीईवयंति समणा देवाणं तेउलेस्सं ति ॥११२॥

भणितं च भगवत्यां मासादिक्रमेण प्रव्रज्याप्रतिपत्तिसमया-दारभ्य मासादिकालक्रमेण, व्यन्तरादीनां देवानां व्यतिव्रजन्ति व्यतिक्रामन्ति, श्रमणास्तथाविधक्रमपरिणतिमदध्यात्मध्यानवन्तस्तेजो लेश्यामिति। तेजोलेश्या हि प्रशस्तलेश्योपलक्षणम्, सा च सुखा-सिकाहेतुरिति कारणे कार्योपचारात्तेजोलेश्याशब्देनात्र सुखासिका विवक्षिता। आलापकश्चायम्—"जे इमे भंते अजत्ताए समणा णिग्गंथा विहरंति एते णं कस्स तेउलेस्सं वीतिवयंति, गो०, मासपरियाए समणे णिग्गंथे वाणमंतराणं देवाणं तेउलेस्सं वीति-वयंति, दुमासपरियाए समणे णिग्गंथे असुरिंदवज्जिआणं भवणवा-सीणं तेउलेस्सं, वीतिवयन्ति एवं एतेणं अभिलावेणं, तिमास-परिआए समणे असुरकुमाराणं देवाणं तेउ०, चउमासपरिआए समणे गहणक्खत्ततारारूवाणं जोइसिआणं देवाणं तेउ०, पंचमा-सपरिआए चंदिमसूरिआणं जोइसिआणं जोइसराईणं, छमासपरि-आए सोहम्मीसाणाणं देवाणं, सत्तमासपरिआए सणंकुमारमाहिंदाणं देवाणं, अट्ठमासपरिआए बंभलोगलंतगाणं देवाणं, णवमासपरिआए महमुक्कसहस्साराणं देवाणं, दसमासपरिआए आणय, पाणय, आरण, अच्चुआणं देवाणं, एक्कारसमासपरिआए गेवेज्जगाणं देवाणं, बारसमासपरिआए समणे णिग्गंथे अणुत्तरोववाइआणं देवाणं तेउलेस्सं वीतिवयंति। तेण परं सुक्के सुक्काभिजातिए भवित्ता ततो

पच्छा सिज्झइ जाव अंतं करेइत्ति२००" ॥१९२॥

नन्वीदृशोऽध्यात्मध्यानयोगो मोक्षवत् कालान्तरभावीति कस्तदुपाय इत्याकाङ्क्षायां नयमतभेदेनाह—

**एयस्स पुण उवाओ णिच्छयओ इह तहापरिणतप्पा।**
**कल्लाणमित्तजोगाइओ अ ववहारओ णेओ ॥१९३॥**

एतस्य काष्ठाप्राप्ताध्यात्मध्यानयोगस्य, पुनरुपायो निश्चयत इह जिनशासने, तथापरिणतस्तदावरणक्षयोपशमोत्थपरिणामवानात्मा, तन्नये तत्कुर्वद्रूपस्यैव तत्कारणत्वात्, व्यवहारतश्च कल्याणमित्रयोगादिस्तदुपायस्तन्नये स्वेतरसकलकारणसत्त्वे यत्सत्त्वे यत्सत्त्वं यदभावे च यदभावः तस्यैव तत्कारणत्वात्, भवति च स्वेतरापुनर्बन्धकभावादिकारणसत्त्वे कल्याणमित्रयोगादिसत्त्वे कुवा-

---

२०० य इमे भदन्त अद्य तावच्छ्रमणा निर्ग्रन्था विहरन्ति एते कस्य तेजोलेश्यां व्यतिव्रजन्ति, गौतम, मासपर्यायः श्रमणो निर्ग्रन्थो वानमन्तराणां देवानां तेजोलेश्यां व्यतिव्रजति, द्विमासपर्याय श्रमणो निर्ग्रन्थोऽसुरेन्द्रवर्जितानां भवनवासिनां तेजोलेश्यां व्यतिव्रजति, एवमेतेनाभिलापेन त्रिमासपर्यायः श्रमण असुरकुमाराणां देवानां तेजोलेश्यां व्यतिव्रजति, चतुर्मासपर्यायः श्रमणो ग्रहनक्षत्रतारारूपाणां ज्योतिष्कानां देवानां तेजोलेश्यां व्यतिव्रजति, पंचमासपर्याय चन्द्रसूर्ययोर्ज्योतीराज्ञयो०, षण्मासपर्यायः सौधर्मैशानानां देवानाम्०, सप्तमासपर्यायः सनत्कुमारमाहेन्द्राणां देवानाम्०, अष्टमासपर्याय ब्रह्मलोकलान्तकानां देवानाम्०, नवमासपर्यायः महाशुक्रसहस्राराणां देवानाम्०, दशमासपर्याय आनतप्राणतारणाच्युतानां देवानाम्०, एकादशमासपर्याय. ग्रैवेयकानां देवानाम्०, द्वादशमासपर्याय श्रमणो निर्ग्रन्थ अनुत्तरौपपातिकानां देवानां तेजोलेश्यां व्यतिव्रजति, ततः पर शुक्ल शुक्लाभिजात्यो भूत्वा तत पश्चात्सिद्ध्यति यावदन्तं करोतीति ॥

सनानाशादिद्वाराऽध्यात्मप्राप्तिरतदभावे च तदभाव इत्यविकलं तस्य तद्धेतुत्वम् ॥१९३॥

कल्याणमित्रयोगादिकमेव कर्त्तव्यत्वेनोपदिशन्नाह—

**संबंधो कायव्वो सद्धिं कल्लाणहेउमित्तेहिं ।**
**जोअव्वं जिणवयणं धरियव्वा धारणा सम्मं ॥१९४॥**

कल्याणहेतुमित्रैः श्रेयोहेतुस्निग्धलोकैः, सह सम्बन्धः कर्त्तव्योऽकल्याणमित्रयोगस्यानर्थहेतुत्वात्, कल्याणमित्रायोगे च बीजाधानाद्ययोगान्नियमोऽयम्। तथा जिनवचनं वीतरागभाषितमंगप्रकीर्णकादिभेदभिन्नम्, श्रोतव्यमाकर्णनीयं नियोगेन प्रतिदिनमेतदाकर्णनेनैव संवेगादिस्थैर्यसिद्धिः, तथा धर्त्तव्या धारणा श्रुतार्थाविस्मरणानुकूलव्यापाररूपा, सम्यक् शास्त्राविरोधेन ॥१९४॥

**कज्जो परोवयारो परिहरिअव्वा परेसि पीडा य ।**
**हेया विसयपवित्ती भावेयव्वं भवसरूवं ॥१९५॥**

तथा कार्यो विधेयः, परेषां स्वव्यतिरिक्तानामुपकार आयतिहितानुकूलो व्यापारस्तस्य स्वोपकारानुवन्धप्रधानत्वात्, तथा परिहर्त्तव्या परेषां पीडा, परपीडापरिहारपरिणामस्यैव स्वपीडापरिहारफलकत्वात्, तथा हेया त्याज्या, संकल्पमूलवैमुख्येन विषयप्रवृत्तिः कामभोगासक्तिः, संकल्पनिरास एव कामनिरासाद्, तदुक्तम्—

"काम जानामि ते मूलं संकल्पात् किल जायसे ।
अतस्तं न करिष्यामि ततो मे किं करिष्यसि ॥१॥"

तथा भावयितव्यं विचारणीयं भवस्वरूपम्। तथाहि—

"यथेह लवणांभोभिः पूरितो लवणोदधिः ।
शारीरमानसैर्दुःखैरसंख्येयैर्भवस्तथा ॥१॥

किञ्च स्वप्नासधनवन्न तथ्यमिह किञ्चन ॥
असारं राज्यवाज्यादि तुषखंडनवत्तथा ॥२॥
तडिदाडंबराकारं सर्बमत्यन्तमस्थिरम् ।
मनोविनोदफलदं बालधूलीगृहादिवत् ॥३॥
यश्च कश्चन कस्यापि जायते सुखविभ्रमः ।
मधुदिग्धासिधाराग्रग्रासवच्चैव सुन्दरः ॥४॥ इत्यादि ॥१९५॥

**पुज्जा पूएअव्वा न निंदियव्वा य कंइ जियलोए ।**
**लोगोणुवत्तिअव्वो गुणरागो होइ कायव्वो ॥१९६॥**

तथा पूज्या लोकलोकोत्तरभावानुगता महान्तः पूजनीयाः, तथा न निन्दितव्याः, केचिज्जघन्यमध्यमोत्कृष्टभेदभाजो जन्तवो जीवलोके, तथा लोकोऽनुवर्त्तितव्यः स्वप्रवृत्त्यनुकूलतया सेवनीयः, तथा च पठ्यते—

"लोकः खल्वाधारः सर्वेषां धर्मचारिणां सम्यक् ।
तस्माद्धर्मविरुद्धं लोकविरुद्धं च संत्याज्यम् ॥१॥"

तथा गुणराग औदार्यदाक्षिण्यादिगुणवहुमानो भवति कर्त्तव्यः, कुतोऽपि वैगुण्यात् स्वयं गुणानुष्ठानासामर्थ्येऽपि हि निबिड-गुणानुरागवशात्तदनुष्ठानफलवन्तो भवन्ति जन्तव इति ॥१९६॥

**अगुणे मज्झत्थत्तं कायव्वं तह कुसीलसंसग्गी ॥**
**वज्जेअव्वा जत्ता परिहरिअव्वो पमादो अ ॥१९७॥**

अगुणे निर्गुणे पुरुषे, मध्यस्थत्वमौदासीन्यम्, कर्त्तव्यं तत्प्रशंसानिन्दयोरुभयतः पाशरज्जुस्थानीयत्वात्, तथा कुशील-संसर्गिरसदाचारजनालापसंवासादिलक्षणा वर्जयितव्या, यत्नादाद-रात्, तस्या दोपसङ्क्रान्तिनिमित्तत्वात्, तथा च पठ्यते—

"अंवस्स य निंवस्स य दोण्हंपि समागयाइ मूलाइ।
संसग्गीइ विणट्ठो अंवो निंवत्तणं पत्तो १॥" इत्यादि।

च पुनः, प्रमादोऽज्ञानसंशयमिथ्याज्ञानादिरष्टप्रकारः, परिह र्तव्यस्तस्यैव सर्वानर्थमूलत्वात्। तदुक्तम्—

"यत्र प्रयान्ति पुरुषाः स्वर्गं यच्च प्रयान्ति विनिपातम्।
तत्र निमित्तमनार्यः प्रमाद इति निश्चयोऽयं मे ॥१॥" ॥१९७॥

**छिन्दिउमसुहविगप्पं कोहाइकसायचायसुद्धीए।**
**सहजं आयसरूवं भावेअव्वं जहावसरं ॥१९८॥**

छिन्दित्वाऽशुभविकल्पं स्फटिकोपरागस्थानीयमशुद्धोपयोग परिणामम्, क्रोधादीनां कषायाणां त्यागेन या शुद्धिः स्वभाव समवस्थानलक्षणा तया हेतुभूतया, सहजमविकृतमात्मस्वरू कूटस्थस्वस्वभावलक्षणम्, भावयितव्यं ध्यातव्यम्, यथावस स्वस्थताकालौचित्येनापकृष्टाध्यात्मध्यानस्यैवोत्कृष्टाध्यात्मध्यानहेतु त्वाद्दलवृद्धेरेवोत्कर्षाङ्गत्वात् ॥१९८॥

आत्मस्वरूपभावनाऽऽकारमाह—

**देहं गेहं च धणं सयणं मित्ता तहेव पुत्ता य।**
**अण्णा ते परदव्वा एएहिंतो अहं अण्णो ॥१९९॥**

देहं शरीरम्, गेहं मन्दिरम्, धनं द्रव्यम्, शयनं शय्या स्थानम्, मित्राणि वयस्याः, तथैव च, पुत्रा अंगजाः, अन्यास्ते परद्रव्यरूपाः, एतेभ्योऽहमन्यो भिन्नस्वभावः, अतो देहादावहं कारादिविधानमज्ञानविजृम्भितमिति, कूटस्थस्वभावोऽहं कथमाद्रिये विकारनिमित्तं परद्रव्यम् ॥१९९॥

---

१ आम्रस्य च निम्बस्य च द्वयोरपि समागतानि मूलानि।
र्या विनष्ट आम्रो निम्बत्वं प्राप्त।

ननु यद्येवं विकारनिमित्तत्वात्सर्वमेव हेयं परद्रव्यं किं तदोपादेयमिति ध्यायेदित्याह—

आयसरूवं णिच्चं अकलंकं नाणदंसणसमिद्धं ।
णियमेणोवादेयं जं सुद्धं सासयं ठाणं ॥२००॥

आत्मस्वरूपं नित्यमनादिनिधनम्, अकलंकं निश्चयतोऽविकृतरूपं चारित्रमर्यादामुपगतम्, तथा ज्ञानदर्शनाभ्यां समृद्धमुपचितम्, नियमेन नियोगेनोपादेयम्, यत् शुद्धं कर्ममलक्षयपवित्रं सत्, शाश्वतं स्थानं परमपदलक्षणम् ॥२००॥ सर्वस्वोपदेशमाह—

किं बहुणा इह जह जह रागद्दोसा लहुं विलिज्जंति ।
तह तह पयट्टिअव्वं एसा आणा जिणिंदाणं ॥२०१॥

किं बहुणा, इह जह इत्यादि अन्यत्र सुविवृतेयं गाथा ॥

तवगणरोहणसुरगिरिसिरिणयविजयाभिहाणविबुहाणं ।
सीसेण पियं रइअं पगरणमिणमायसरणट्ठं ॥२०२॥
अणुसरिय जुत्तिगब्भं पुव्वायरियाण वयणसंदब्भं ।
जं काउमिणं लद्धं पुण्णं तत्तो हवउ सिद्धी ॥२०३॥

मृगममिति ॥ ॥ अथ काव्यम् ॥

यस्यासन्गुरवोऽत्र जीतविजयप्राज्ञाः प्रकृष्टाशयाः ।
भ्राजन्ते सनया नयादिविजयप्राज्ञाश्च विद्याप्रदाः ॥
प्रेम्णां यस्य च सद्म पद्मविजयो जातः सुधीः सोदरस्तेन न्यायविशारदेन विवृतो ग्रन्थः स्वयं निर्मितः ॥१॥

॥उपदेशरहस्यनामा ग्रन्थः समाप्तः॥

इति श्रीसकलपण्डितावतंसपण्डितश्रीमन्नयविजयगणि-
चरणारविन्दमधुकरपण्डितश्रीयशोविजयगणि-
विरचितमुपदेशरहस्यप्रकरणविवरणं
स्वोपज्ञं समाप्तमिति श्रेयः ॥

